सौरीꣳ सप्रपञ्चपरब्रह्माभिधायिनीमतिजगतीमियच्छतमानावुर्गंसि शाखेन्द्रस्य बाहू स्योनास्यासंदी क्षत्रस्याधीवासꣳ स्योनोꣳ सुन्वन्निषसाद शुनःशेपो वारुणीं गायत्रीमभिभूरस्यक्षा यजमाना वा ब्रह्मꣳस्त्वमामन्त्रणानि पञ्च लिङ्गोक्तानीन्द्रस्य स्फ्योऽग्निः पृथुराधेनयꣳस्वाहाकृता अक्षाः सवित्रा लिङ्गोक्तदेवतम् ॥ ३९ ॥ अथ चरकसौत्रामण्यश्विनोरार्षमश्विभ्यां त्रीणि लिङ्गोक्तानि वायुः सौमी गायत्री कुविदङ्गꣳ सुकीर्तिः काक्षीवत शाद्यः सौम्यानिरुक्ता त्रिष्टुब्युवमनुष्टुप् पुत्रमिव त्रिष्टुबश्विसरस्वतीन्द्रदेवत्ये अश्विसरस्वतीन्द्रदेवत्ये ॥ ४० ॥ इति० संहितायां दशमोऽध्यायः ॥ १० ॥

इति सर्वानुक्रमणिकायां प्रथमोऽध्यायः ॥ १ ॥

अथाग्निं प्रजापतिरपश्यत्साध्या वापश्यन्स्तोऽग्निः पञ्चचितिकः प्रथमा चितिः प्रजापतेर्द्वितीया देवानां तृतीयेन्द्राग्न्योर्विश्वकर्मणश्चतुर्थ्यृषीणां पञ्चमी परमेष्ठिनोऽथ प्रतिकर्मदर्शिनो युञ्जानोऽष्टौ सावित्राणि सवितापश्यदाद्या तृतीया चानुष्टुप् चतुर्थीपञ्चम्यौ जगत्यौ द्वितीया गायत्री पञ्चमी त्रिष्टुबिमं नो यजुरन्ता गायत्र्यवसानाददेऽश्विर्हस्तेऽनुष्टुब्यजुरन्ता ॥ १ ॥ प्रतूर्तं नाभानेदिष्ठ आर्षीमास्तारपङ्क्तिर्युञ्जाथां कुश्रिर्गार्त्समदो गायत्रीं योगेयोगे शुनःशेप आर्षी प्रतूर्वन्त्रिष्टुब्विराड्रूपा यत्तुर्गर्भो रूपयजुः पृथिव्याः सर्षीण्यपाग्नेयान्यन्वग्निराग्नेयीं त्रिष्टुभं पुरोधस आगत्य मयोभुव आश्वीनमनुष्टुभमाक्रम्यानुष्टुप् द्यौस्ते पृष्ठमुत्क्राम विराडुदक्रमीत्त्रिष्टुबास्था द्वे गृत्समद आग्नेय्यौ परिसोमको गायत्रीं परिवा पायुरानुष्टुभं त्वमग्ने गृत्समदो जगतीम् ॥ २ ॥ पृथिव्या आग्नेयमपां पुष्करपर्णꣳ स्वराट्पङ्क्तिः शर्म द्वे अनुष्टुभौ कृष्णाजिनपुष्करपर्णे पुरीष्योऽग्निस्त्वामग्ने तृचं भारद्वाज आग्नेयं गायत्रꣳ सीद होतर्देवश्रवा देववातश्च त्रिष्टुभं निहोता गृत्समदः सꣳसीदस्व प्रस्कण्वो बृहतीम् ॥ ३ ॥ अपो देवीः सिन्धुद्वीप आर्षी न्यङ्कुसारिणीꣳ संते त्रिष्टुप्पार्थिवोऽर्धो वायव्योऽर्धः सुजातोऽनुष्टुबाग्नेय्युदु तिष्ठ विश्वमनाः पथ्याबृहतीमूर्ध्वः कण्व उपरिष्टाद्बृहतीꣳ स जातस्त्रित त्रिष्टुभꣳ स्थिरो रासभेऽनुष्टुबुष्णिग्वा शिवोभवाञ्जी पथ्याबृहती प्रैतु लिङ्गोक्तमदा पङ्क्तिस्त्र्यवसानाग्नेगायत्र्येकपदाग्नेय्यं तमग्निमाग्नेये ओषधयस्त्रिष्टुबनुष्टुभावोषधिदेवत्ये व्यस्यन्नाग्नेयो-

ऽर्चौ विपाजसोत्कीलः कात्य आग्नेयीं त्रिष्टुभम् ॥ ४ ॥ आपो ह्यापᳫं सिन्धुद्वीपस्तृचं गायत्रं मित्र उपरिष्टाद्बृहती मैत्री रुद्रा अनुष्टुप् रौद्री सᳫंसृष्टां द्वे सिनीवालीदेवत्ये उखामादित्या मखस्य मृत्पिण्डो वसवस्त्वा लिङ्गोक्तानि सर्वत्रादित्यै रास्नादितिरौपं छन्द्यामादित्योष्णगादितिरावटं देवानां पञ्चोखानि मित्रस्य विश्वामित्रो मैत्री देवस्त्वा सावित्र्यो बृहत्युत्थाय पूर्वार्धर्चं वीप उत्तरो मैत्रः ॥ ५ ॥ आकूति लिङ्गोक्तान्योङ्क्रमणानि मास्वोत्यो गायत्र्यौष्णिष्टुभावग्निश्च पाद आग्नेयो द्रुनः सोमाहुतिराग्नेयीं गायत्री परस्या विरूप आङ्गिरसः परमस्या आरुणिरनुष्टुभं यदग्ने द्वे जमदग्निरहर्नाभानेदिष्ठस्त्रिष्टुभौ याः सेना अनुष्टुभः आग्नेय्योऽस्योपरिष्टाद्बृहती ॥ इति॰ संहितायामेकादशोऽध्यायः ॥ ११ ॥

दृशानो वत्सप्री त्रिष्टुभᳫं रौक्मी नक्तोषासा कुत्स आग्नेयीं विभ्वा द्यावाश्वः सावित्री जगतीᳫं सुपर्णः कृतिश्चतुरवसाना गायत्रमती विपश्री विष्णोर्लिङ्गोक्ता न्यक्रन्ददग्नसप्रीराग्नेयीं त्रिष्टुभमग्न ऊर्ध्वबृहती पुनर्गायत्र्यायास्याध्रुवोऽनुष्टुभमुदुत्तमᳫं शुनःशेपो वारुणीं त्रिष्टुभमग्ने त्रित आग्नेयीᳫं हᳫंस उक्ता जगतीयजुरन्तान्ते बृहद्यजुः सीदत्वमाग्नेयी त्रिष्टुभमन्तरग्नेऽनुष्टुभौ ॥ ७ ॥ दिवस्पर्याग्नेयं त्रैष्टुभं द्वादशर्चं वत्सप्रीर्भालन्दनः समिधाग्निं विरूपाक्ष आङ्गिरस आग्नेयं गायत्रमुदुत्वा तापसोऽनुष्टुभं प्रेद्दनुष्टुप्प्रमायमाग्नेयीं वसिष्ठस्य त्रिष्टुभमापोदेवीराप्यवस्यग्ने विरूप आग्नेयीं गायत्रा गर्भो असि तिस्रोऽनुष्टुभो बोधा मे दीर्घतमास्त्रिष्टुभᳫं सयोधि सोमाहुतिराग्नेयीं यजुरन्ता गायत्री यजुर्धद्यकर्मणं पुनस्त्वा त्रिष्टुबाग्नेयी ॥ ८ ॥ अपेत लिङ्गोक्तबहुदेवत्या संज्ञानमूर्ध्वदेवत्यमग्नेः त्रिकताश्विनः परिश्रितोऽयᳫंसः पञ्चर्चमाग्नेयं त्रैष्टुभं विश्वामित्रश्चतुर्थ्यनुष्टुबयं तेऽनुष्टुप्चिदेएके लोकं लिङ्गोक्तानुष्टुप् ता अस्यापाङ्क्तियमेध ऐन्द्र इन्द्रं जेतामाधुच्छन्दस ऐन्द्रीᳫं समितं चतस्रो ह्यग्निदेवत्या उष्णिगुपरिष्टाद्बृहत्युष्णिक्पङ्क्त्यो मानवेयास्तुतिस्त्रिष्टुप् ॥ ९ ॥ असुन्वन्तं नैर्ऋतं तृचं त्रैष्टुभं यं ते यजमानदेवत्या नमोविराड्भूतिदेवत्येकपदा निवेदान आग्नेयीं त्रिष्टुभं विश्वावसुर्देवगन्धर्वः सीरा द्वे सीरदेवत्ये युधः सौम्यो गायत्रीत्रिष्टुभौ शुनं चतस्रः सीतादेवत्याः कुमारहारितो द्वे त्रिष्टुभौ तृतीयापाङ्क्तिश्चतुर्थ्यनुष्टुम्बिमुच्य-

ध्यमानड्डुही गायत्री सजूर्लिङ्गोक्तदेवतम् ॥ १० ॥ या ओषधीः सप्त- विंᳪशतिरनुष्टुभ ओषधिस्तुतिमाथर्वणो भिषङ्मुञ्चन्तु वन्धुद्वाद- शानारभ्याथीनामामाहिरण्यगर्भः कार्यो त्रिष्टुधमभ्यावर्तस्वाग्णि- गाग्नेय्यग्नेयद्वायत्रीयं त्रिष्टुबग्नेतव पावकोऽग्निराग्नेयᳪषड्र्चं प्र- थमे विष्टारपङ्क्ती तिस्रः सतोबृहत्य उपरिष्टाज्ज्योतिः पञ्चम्यान्याय- स्यगोतमः सोमो गायत्री त्रिष्टुबुष्णिह आतेऽवत्सारस्तुभ्यन्ता द्वे विरूपस्तिस्रो गायत्र्य आग्नेय्यः ॥ ११ ॥ इति० संहितायां द्वादशो- ऽध्यायः ॥ १२ ॥

मयिकश्चुपाग्नेयी ग्रहादित्यदेवत्या त्रिष्टुब्भिरण्यगर्भः कार्यो त्रिष्टुभं द्रप्सो देवथवा आदित्यो नमोस्तु सार्पं तृचमानुष्टुभं कृणु- ष्वपञ्चप्रसिसरा राक्षोघ्ना देवानामार्षᳪ सर्वास्त्रिष्टुभं आग्नेयीर्वाम- देवश्चापस्यदग्नेष्ट्वा यजुराग्नेयमिन्द्रस्यैन्द्रं भुवस्त्रिशिरा आग्नेयी त्रिष्टुभम् ॥ १२ ॥ ध्रुवास्यूर्ध्वबृहती प्रजापतिरनुष्टुप् भूरसि प्रस्ता- रपङ्क्तिरसाᳪ स्वयमातृण्णादेवता विश्वस्मा इत्येतस्य च यजुषः का- ण्डात्काण्डादानुष्टुभं तृच्यृचमग्निना दृष्टं दूर्वेष्टुकादैवतं यास्त आ- ग्नेयं तृच्यृचमानुष्टुभमिन्द्राग्निभ्यां दृष्टं विराडयं लोकः स्वराडसौ लोकः प्रजापतिष्ट्वा विश्वज्योतिषं मधुश्चर्तुदैवतमषाढासि सविता- पस्यद्वाचापस्यविष्टकादैवतम् ॥ १३ ॥ मधुवाता वैश्वदेवं तृचं गा- यत्रं गोतमोपां गम्भन्पङ्क्तिस्त्रीन्त्समुद्रांस्त्रिष्टुप्कौर्म्यं तृच्यृचं ध्रुवा- सि त्रिष्टुब्विधेबृहत्यौरवं तृच्यृचमग्ने युक्ष्वाग्नेयं तृच्यृचं गायत्रमा- द्यायां भरद्वाजोद्वितीयस्यां विरूपः सम्यक्त्रिष्टुब्लिङ्गोक्तदेवतर्चे- स्याबृहत्यग्निर्ज्योतिषोष्णिगादित्यं गर्भं पञ्चर्चमाग्नेयं त्रैष्टुभमिमंमा पञ्चर्चमाग्नेयं त्रैष्टुभमेव द्वे द्वे चाते यजुषी स्वंयाविष्टोशनाः काव्य आग्नेयीरेका गायत्रीमपात्वा विंᳪशतिरैष्टकान्ययं पुरः पश्चा- त्प्राणभृद्दैवत्यानि लोकं ता इन्द्रं तिस्रः प्रतीकोक्ता एवᳪ सर्वत्र ॥ १४ ॥ इति० संहितायां त्रयोदशोऽध्यायः ॥ १३ ॥

अथ द्वितीयाचितिः । ध्रुवक्षितिः पञ्चादिवन्यस्तासां प्रथमा वि- द्वतस्त्रिष्टुभा यजुरन्ताः शुक्रश्चर्तव्यᳪ सजूः पञ्च विश्वेषां देवानामार्षं ता एव देवताः प्राणं मे पञ्च वायव्यान्यपः पञ्चापानि मूर्धावय एकोनविंᳪशतिर्लिङ्गोक्तदेवतानि ॥ १५ ॥ अथ तृतीयेन्द्रा- ग्नी अनुष्टुप् पूर्वोऽर्धर्च ऐन्द्राग्न उत्तरः स्वयमातृण्णादेवतो विश्व-

कर्मा वायव्यं राशयसि पञ्च दिग्देवत्यानि विश्वकर्मा वायव्यं नमश्चेषधर्तव्ये आयुर्मे दत्त लिङ्गोक्तदेवतानि माच्छन्दश्च पङ्क्तिं दाम्मूर्धानुष्टुब्यन्त्री परोष्णिक्चतुर्दश यजूंषि प्राणदेवत्यानि ॥१६॥ अथ चतुर्थ्योनुरष्टादशाग्नेर्दैकया सप्तदश सर्वाणि लिङ्गोक्तदेवतानि सहधर्तव्यम् ॥ १७॥ इति० संहितायां चतुर्दशोऽध्यायः ॥१४॥

अथ पञ्चस्यग्नेजातानाग्नेय्यौ त्रिष्टुभौ षोडशीचतुश्चत्वारिंशद्दाहिंशोक्ते अग्नेस्त्रिष्टुप् एयश्चत्वारिंशद्राद्विमिनैकान्नत्रिंशद्राशयसि पञ्चायंपुरः पञ्चैतानि सर्वाणि लिङ्गोक्तदेवतानि ॥ १८ ॥ अग्निर्मूर्धाग्नेयोऽनुवाकः प्रथमस्तृचो गायत्री द्वितीयस्त्रैष्टुभो भुवस्तृतीयो जागतोऽयमिह चतुर्थ आनुष्टुभः सप्तायः सं पञ्चमः प्रगाथ एनावस्तत्र पूर्वा बृहती सतोबृहत्युत्तरा ताभ्यां तिस्रो बृहत्यः । संपादिताः षष्ठ औष्णिहोऽग्नेवाजस्य गोतमः सप्तमः पुनः ककुभः प्रगाथो भद्रो नस्तत्र पूर्वा ककुप्सतोबृहत्युत्तराभ्यां तिस्रः ककुभः संपादिता अष्टमः पाङ्क्तोऽग्निं तं पदपाङ्क्ती नवमोग्ने त्वमग्निं होतारतिछन्दास्त्वयसानाग्नेयं त्रैपदस्तृचः ॥ १९ ॥ अयमग्निर्विरूपोऽश्वोथियुद्गविष्टिरो जनस्य सुतम्भरः सखायः इषः सं सत्मिरसंयननस्त्वां प्रस्कण्व एनावो वसिष्ठोऽग्नेवाजस्य गोतमो भद्रो नः सौभरिरग्निं तं कुमारवृषौ येनाएवाग्नेय्यः पङ्क्तित्रिष्टुभौ द्वे अनुष्टुभौ तदर्धतव्यं परमेष्ठी सौरं द्रोधदस्यौ वसिष्ठस्त्रिष्टुममाग्नेयीमायोर्वे स्वयमातण्णदेवस्ये सहस्रस्य पञ्चाग्नेयानि ॥ २० ॥ इति० संहितायां पञ्चदशोऽध्यायः ॥ १५ ॥

रौद्रोध्यायः । परमेष्ठिन आर्षं देवानां वा प्रजापतेर्वायोऽनुवाकः षोडशर्च एकरुद्रदेवत्यः प्रथमा गायत्री तिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्तानुष्टुभो द्वे जगत्यौ मानो द्वे कुत्सः ॥ २१ ॥ अन्त्यानुवाके सतिरुद्रस्तुतिराद्योपरिष्टाद्बृहती द्वितीया जगती कुत्सस्य तृतीयानुष्टुब्द्वे त्रिष्टुभौ द्वे अनुष्टुभावसंख्याता बहुरुद्रदेवत्या दशानुष्टुभो मन्त्रा अवतानसंज्ञकास्ततोऽन्त्यानि त्रीणि यजूंषि बहुरुद्रदेवत्यानि प्रत्यवरोहसंज्ञका मन्त्राः ॥ २२ ॥ मध्ये सर्वाणि यजूंषि हिरण्यबाहव इति तिस्रोऽशीतयो रुद्राणां तेषामुभयतोनमस्कारा अन्येऽन्यतरतोनमस्कारा अग्रे जातानामरुद्राः समा-

ष्य इत्यादयो नमो वः किरिकेभ्य इत्यग्निवायुसूर्यहृदयभूताः पञ्च व्याहृतयो बहुरुद्रदेवत्याः ॥ २३ ॥ इति० संहितायां षोडशोऽध्यायः ॥ १६ ॥

अश्मन्मारुतमश्मᳬस्तेऽदमा मय्याशीर्ये द्विषम आभिचारिकमिमाम आग्नेयमृतयो बृहती पङ्क्तिर्या समुद्रस्य द्वे गायत्र्यावुपज्मं जगती त्रिष्टुब्वापामिदं बृहत्यग्ने पावक व सुयवः स नोमेधातिथिराग्नेय्यौ गायत्र्यौ पावकया जगती भरद्वाजोनमस्ते बृहतीमामाग्नेयीमृषिसुता लोपामुद्रा ॥ २४ ॥ नृषदे पञ्चाग्नेयानि ये देवा जगत्यौ प्राणदेवत्ये प्राणदा बृहती पङ्क्तिर्वाग्नेय्याऽग्निस्तिग्मेनाग्नेयीं गायत्री भरद्वजो य इमा वैश्वकर्मणीत्रिष्टुभो विश्वकर्मा भौवनः ॥ २५ ॥ आशुरैन्द्रीर्द्वादश त्रिष्टुभोऽप्रतिरथोऽवसृष्टानुष्टुविपुद्देवत्या प्रेतायोद्धृन्स्तौत्यनुष्टुबसौ या मारुती त्रिष्टुब्यत्र लिङ्गोक्तदेवता पङ्क्तिर्मर्माणि लिङ्गोक्तैव त्रिष्टुबुदेनं तिस्रोऽनुष्टुभ आद्याग्नेयी द्वितीयैन्द्री तृतीया लिङ्गोक्तदेवता पञ्चदिशः पञ्चयज्ञाग्निसाधनयादिन्य आद्ये द्वे त्रिष्टुभौ तृतीया पङ्क्तिर्बृहती वा चतुर्थी बृहत्यैवास्यात्रिष्टुब्विमानो द्वे आदित्यदेवत्ये आद्या विश्वावसोर्द्वितीयाऽप्रतिरथस्य देवहूर्विधृतिरनुष्टुब्यज्ञदेवत्या वाजस्यैन्द्यनुष्टुबुद्वाभमैन्द्राग्न्यनुष्टुबेव ॥ २६ ॥ क्रमध्वं पञ्चाग्नेय्य आद्यानुष्टुप् ततस्त्रिष्टुप् ततो बृहतीपिपीलिकमध्या ततोऽनुष्टुप्त्रिष्टुबन्त्याग्नेसहस्राक्ष विराडाग्नेयी सुपर्णो द्वे पङ्क्तित्रिष्टुभौ ताᳬसवितुः सावित्री त्रिष्टुभं पुरस्ताज्ज्योतिषं कण्वो ददर्श विधेमाग्नेयीं गृत्समदस्त्रिष्टुभमस्यास्त्रिस्थानोऽग्निर्देवता प्रेद्धो विराडाग्नेयीवसिष्ठस्य चित्तिं वैश्वकर्मण्यतिजगती सप्तत आग्नेयीत्रिष्टुप्सप्तऋषीणाम् ॥ २७ ॥ शुक्रज्योतिः षण्मारुत्य आद्या चतुर्थी चोष्णिग्द्वितीया तृतीया च गायत्री पञ्चमी जगती षष्ठी गायत्र्युष्णिग्वेन्द्रं दैवीर्मारुतमिमं त्रयोदशर्चं आग्नेयस्त्रैष्टुभोऽनुवाको यज्ञस्तुतिर्घृतस्तुतिर्वा वसोर्धाराभिवादिनी वा घृतं मिमिक्षे गृत्समदः समुद्राद्वामदेवश्चत्वारिंशद्वा यज्ञपुरुषदेवत्य ऋषभो मन्त्रः ॥ २८ ॥ इति० संहितायां सप्तदशोऽध्यायः ॥ १७ ॥

वाजश्चमे देवानामार्षमैनेयᳬशुर्भियजमानोऽग्नेः कामान्याचते वाजप्रसवीयᳬ सप्तर्चं विश्वेत्रैष्टुभं वैश्वदेवं लुगोधानाको वाजोन-

स्तिस्रोऽन्नदेवत्या आद्यानुष्टुब्द्वे त्रिष्टुभौ संमा विराजाद्याग्नेय्यो सरस्वत्यै लिङ्गोक्तदेवतम् ॥ २९ ॥ ऋताषाड्गन्धर्वाप्सरसः सनः प्राजापत्या प्रस्तारपङ्क्तिः समुद्रोऽसि वायव्यानि त्रीणि रुचमाग्नेय्यनुष्टुप्तत्त्वा वारुणी त्रिष्टुभꣳ शुनःशेपः स्वर्णाग्नेयानि पञ्चाग्निं युनज्म्याग्नेय्यास्तिस्र आद्ये द्वे त्रिष्टुभौ पङ्क्तिस्तृतीया दिवो द्वे आग्नेय्यौ परोष्णिङ्महापदपङ्क्ती इष्टोयज्ञो व्यृचं यजमानाग्निदेवत्यं गालव आद्योष्णिग्द्वितीया गायत्री ॥ ३० ॥ यदाकूतादष्टर्चमाग्नेयं विश्वकर्मणस्तृतीया दैवी वाद्या जगती तिस्रस्त्रिष्टुभश्चतस्रोऽनुष्टुभोऽग्निरद्दस्यद्वितपादिनीं त्रिष्टुभं देवश्रवा देववातश्च भारतावृचो यज्ञुर्ये अग्नयोऽनुष्टुभाग्नेयी ॥ ३१ ॥ वार्त्रहत्याय सप्तर्चमिन्द्रोऽपश्यदाद्ये द्वे वार्त्रघ्न्यौ गायत्रीत्रिष्टुभौ विश्वामित्रस्य च धिनोऽनुष्टुम्मृगो न त्रिष्टुप्प्रथमाꣳशासो भारद्वाजो द्वितीयां जय ऐन्द्री द्वे वैश्वानर्यौ गायत्रीत्रिष्टुभौ पृष्टो दिवि कुत्सस्य चाश्याम द्वे त्रिष्टुभावाग्नेय्यौ कामधरश्चावद्याम भरद्वाजस्य च वयं ते कात्यस्योत्कीलस्य च धामच्छदनुष्टुप् वैश्वदेवी ॥ ३२ ॥

इति ० संहितायामष्टादशोऽध्यायः ॥ १८ ॥

अथ सौत्रामणी प्रजापतेरार्षमश्विनोः सरस्वत्याश्च स्वाद्वीं त्वानुष्टुप्सुरासोमदेवत्या सोमोऽसि चत्वारि सौराणि परिस्रोभाराजः सौमी बृहती वायोस्तृचो गायत्रः सौम्य आभूतेर्ब्रह्म क्षत्रं त्रिष्टुप्सुरासोमदेवत्या नाना हि जगती सुरासोमदेवत्या तेजोसि पयोदेवत्यान्योजोसि सुरादेवत्यानि याव्याꣳहैमवर्चैरनुष्टुब्विपूचिकास्तुतिर्यदा पिपेषाग्नेयी बृहती संपृचस्थ पयोग्रहा विग्रहस्य सुराग्रहा देवा यज्ञं ब्राह्मणानुवाको विꣳशतिरनुष्टुभः सोमसम्पत् ॥ ३३ ॥ सुरावन्तं चतुर्ऋचं त्रैष्टुभमश्विसरस्वतीन्द्रदेवत्यं पितृभ्यः सप्त पित्र्याणि पुनन्तुमा नवर्चं पवमानमाद्ये द्वे पित्र्ये अनुष्टुभौ प्रजापतिस्तृतीया वैखानस आग्नेयी गायत्री चतुर्थी लिङ्गोक्तदेवतानुष्टुप्पञ्चम्याग्नेयी गायत्री षष्ठ्याग्नेयी ब्राह्मी च गायत्री ब्राह्मस्तृतीयः पादः सौमी सावित्र्यष्टमी त्रिष्टुब्वैश्वदेवी ये समाना अनुष्टुभौ पित्र्याद्या द्वितीया यजमानाशीर्द्वे स्रुती त्रिष्टुब्देवयानपितृयाणौ पन्थानौ ग्रहीतेदꣳहविस्त्र्यवसानार्ष्येयजमानाशीः ॥ ३४ ॥ उदीरतां त्रयोदशर्चं पैत्र्यं त्रैष्टुभꣳ शा-

ह्र एकादशी ॥ जगत्याच्याजानुदशार्चोऽनुवाको नव पित्र्यो द्-
शम्यैन्द्री गायत्री तृतीयाचतुर्थीनवम्योऽनुष्टुभस्त्रिष्टुभ इतराः सो
मो राजाएर्चमश्विसरस्वतीन्द्रा अपश्यन्नाधास्तिस्रो महाबृहत्य
उपान्त्या च चतुर्थ्यन्ते अतिजगत्यौ शेषे अतिशक्वर्यौ व्यवसाने
सीसेन तन्त्रमश्विसरस्वतीन्द्र देवत्याः षोडश जगत्यः ॥ ३१ ॥
इति० संहितायामेकोनविंशोऽध्यायः ॥ १९ ॥

क्षत्रस्य योनिर्द्विपदा गायत्री आसन्दीदेवतका मित्रावारुणा-
जिनं मृत्योरुक्मावश्विनोर्भैषज्येन लिङ्गोक्तदेवतानित्रीणि कोऽसि
प्राजापत्या गायत्री शिरो मे पञ्चर्चमिन्द्रशरीरावयवदेवताकं तृती-
या गायत्र्यन्त्या महापङ्क्तिस्त्र्यवसानानुष्टुभोन्त्याः प्रतिक्षत्रे वैश्वदे-
वं त्रयो देवा दैवीपाङ्क्तिस्त्र्यवसानाप्रथमा द्वितीयैर्वैश्वदेवमाशीर्लिङ्गं
लोमान्यनुष्टुप्लिङ्गोक्तदेवता ॥ ३६ ॥ यद्देवास्तिस्रोऽग्निवायुसूर्यदेव-
त्या अनुष्टुभः कूष्माण्डीर्यद्ग्रामे लिङ्गोक्तदेवतꣳ समुद्रेते द्विपदा
विराडापो द्रुपदादिवानुष्टुबाप्युद्वयꣳसौर्यनुष्टुप्प्रस्कण्वस्याप आ-
द्याग्नेयी पङ्क्तिरेधोऽसि समिद्यत्ये यजुषी समावृत्यनिरुक्ता गायत्री
वैश्वानरज्योतिर्यजुरभ्यादध्याग्नेयं शृत्रमानुष्टुभमादवतराश्विरꣳ-
शुना सौर्यनुष्टुप् सिञ्चन्ति परि सौर्येन्द्री चानुष्टुब्धानायन्तमैन्द्री
गायत्री विश्वामित्रस्य च बृहदिन्द्राय बृहती नृमेधपुरुमेधयोरध्व-
र्यो गायत्री ॥ ३७ ॥ यो भूतानामात्मप्रवादा पङ्क्तिर्नारायणीया कौ-
ण्डिन्यस्य प्राणपा मे द्वे अनुष्टुबुपरिष्टाद्बृहत्यौ लिङ्गोक्तदेवते स-
मिद्ध इन्द्र एकादशार्चीत्रिष्टुभ आङ्गिरस इध्मस्तनूनपान्नराशꣳस
इडो बर्हिर्द्वार उषासानक्ता दैव्या होतारा तिस्रो देवीस्त्वष्टा वनस्प-
तिः स्वहाकृतय इत्येता आप्रदेवता आयातु सप्त त्रिष्टुभ ऐन्द्य-
आमन्द्रैर्वृद्धत्यायातु वामदेवस्त्रातारं गर्ग आमन्द्रैर्विश्वामित्र
एवेद्वसिष्ठः ॥ ३८ ॥ अथ होत्रं त्रिपशोः समिद्धो अग्निराप्रीर्द्वादश
विदर्भिरश्विसरस्वतीन्द्रदेवत्या अनुष्टुभोऽश्विना हविस्तिस्रोऽनु-
ष्टुभ एकैकाश्विसरस्वतीन्द्रदेवत्या य इन्द्र सवितृवरुणदेवत्या-
स्तिस्रोऽनुष्टुभोऽश्विना गोभिस्तिस्रोऽनुष्टुभो युवं पुत्रमिवा-
नुष्टुप्त्रिष्टुभौ यस्मिन्नश्वास आग्नेय्यौ जगतीत्रिष्टुभावश्विना-
तेजसैकादशर्चꣳशार्ङ्गं गोमदृतसमदस्तृचमाश्विनं गायत्रं पावका
नो मधुच्छन्दाः सारस्वतमिन्द्रायाह्यैन्द्रं मधुच्छन्दा एवानुकृत-

मानुष्टुभमश्विसरस्वतीन्द्रदेवत्यम् ॥ ३९ ॥ इति० संहितायां विं-
शोऽध्यायः ॥ २० ॥

इमंमे गायत्रीत्रिष्टुभौ वारुण्यौ शुनःशेपस्त्वंनस्त्रिष्टुभावाग्नि-
वारुण्यौ वामदेवो महीमूषु त्रिष्टुब्यादित्या सुत्रामाणं गयः-प्लातः
सुनावमै स्वर्ग्या गायत्र्यानो मैत्रावरुणी गायत्री विश्वामित्रः प्रवा-
हवा वसिष्ठास्त्रिष्टुभᳪ समिद्धो अग्निरेकादशाप्रमानुष्टुभᳪ स्व-
स्त्यात्रेयस्यार्षं वयोधा इन्द्रो देवता वसन्तेन ऋतुना षडृचमानु-
ष्टुभं लिङ्गोक्तदेवᳪ होता यक्षद्द्वादशाप्रीः प्रैषा अश्विसरस्वतीन्द्र-
देवत्या अश्विनौ छागस्य सप्त लिङ्गोक्तदेवताः प्रैषा वनस्पतिमभि-
यूपोऽग्निᳪस्विष्टकृदग्निर्देवं बर्हिरेकादशानुयाजप्रैषा अश्विसरस्व-
तीन्द्रदेवत्या अग्निमद्य सूक्तवाकप्रैषो लिङ्गोक्तदेवतो लिङ्गोक्तदेव-
तः ॥ ४० ॥ इति० संहितायामेकविंशोऽध्यायः ॥ २१ ॥ इति सर्वानु-
क्रमणिकायां द्वितीयोऽध्यायः ॥ २ ॥

ॐ अथाश्वमेधश्चतुरोऽध्यायान्प्रजापतिरपश्यत्तेजोसि . सौवर्णं
निष्कमिमामगृभ्णन्संवत्सरो यत्पुरुषस्त्रिष्टुभमभिधालिङ्गोक्तानि यो
अर्वन्तं गायत्र्यर्धेनाश्वस्तुतिः परार्धे लिङ्गोक्ताऽग्नये लिङ्गोक्तान्येव
हिंकारायेत्यश्वस्यैकान्नपञ्चाशच्चेष्टितानि हिरण्यपाणिं पञ्चर्चᳪ सा-
वित्रं गायत्रमाद्या मेधातिथिरग्निᳪस्तोमेनाग्नेयं तृचं गायत्रᳪ द्युग-
म्भरो विश्वामित्रो विरूपो यथासत्यमजीजनो वि पाप्मानी प्राति
पिपीलिकमध्यामनुष्टुभं व्यरुणत्रसदस्यू विभूरश्वदेवतं वेधा देव-
मिहरन्तिराग्नेयानि चत्वारि कार्यो धूमभणानि लिङ्गोक्तान्याप्रख्य लि-
ङ्गोक्तान्येवाध्यायात् ॥ १ ॥ इति० संहितायां द्वाविंशोऽध्यायः ॥ २२ ॥ कायो हिर-

प्रजापतये प्राजापत्यं यस्ते देवं यः प्राणतस्त्रिष्टुप्
ण्यगर्भस्य युञ्जन्ति मधुच्छन्दा आदित्यदेवत्यां गायत्री युञ्जन्त्यस्या-
श्वस्तुतिर्यद्वातो बृहतीमा वसवस्त्वा लिङ्गोक्तानि लाजी २ नदय-
देवत्यं कःस्विदत्रस्तोऽनुष्टुभः प्रश्नप्रतिप्रश्नाभूरथप्रश्नोचे होतुर्ब्राह्मणश्च
वायुश्वा लिङ्गोक्तानि सᳪशितस्तिस्रोऽश्वदेवत्या अनुष्टुब्विराट् त्रि-
ष्टुभोऽग्निः पशुराश्वानि त्रीण्यश्वनुष्टुब्यश्वस्तुतिर्गणानां त्वा च-
त्वारि लिङ्गोक्तानि ॥ २ ॥ उत्सक्थ्या गायत्र्यादवी एकादशर्चमा-
नुष्टुभं द्वितीया तूपरिष्टाद्बृहत्यध्वर्य्वादीनां कुमार्यादिभिरश्लील-
भाषणं ता एव देवता दधिक्राव्णो दधिक्रावा वामदेवः सुरभिम-

सीमनुष्टुभमाद्वी गायत्रीं पङ्क्तिमाद्यमुष्णिगाद्याश्चतस्रोऽनुष्टुभो-न्त्यास्त्रिष्टुप् कस्त्वा पङ्क्तिमाद्यमाद्या गायत्री पञ्चानुष्टुभः कःस्वि-दष्टादशर्चं ब्रह्मोद्यं होत्रादीनां प्रश्नप्रतिप्रश्नभूतमाद्याश्चतस्रोऽनु-ष्टुभः कास्विदाद्याश्चतस्रश्चान्त्या दश त्रिष्टुभः सुभूःस्वयंभूरनुष्टुब्लि-ङ्गोक्तदेवता होतायक्षत्प्राजापत्यः प्रैषः प्रजापतेर्हिरण्यगर्भः प्राजा-पत्या त्रैष्टुभम् ॥ ४ ॥ इति० संहितायां त्रयोविंशोऽध्यायः ॥ २३ ॥

अश्वस्तूपर इत्यादयः पशवोऽध्यायेनोक्ता देवता या पर्यङ्ग्या-स्तथा रोहितादयो गुणयुक्ता आरण्याश्च कपिञ्जलादय आख्याया-च्छादं दद्भिरित्यादित्वगित्येतदन्तं प्रत्यदैवतमुक्तमश्वस्तूपरो ब्राह्म-णोऽध्यायः ॥ ४ ॥ संहितायां चतुर्विंशोऽध्यायः ॥ २४ ॥

शादं दद्भिस्त्वचाऽन्तश्च जुम्बकाय वारुणी द्विपदा मुष्टिकृतं ओ-दनस्य पथा वाचनाशान्यन्तर्जले पश्येमे कार्व्या त्रिष्टुभौ हिरण्यगर्भः प्राजापत्य आनो दशर्चं जगतं वैश्वदेवं गोतमः स्वस्तिमनो विराट्-स्थाना भद्रंकर्णेभिस्तृचं त्रैष्टुभं मानोऽश्वस्तोमीयं दीर्घतमास्त्रै-ष्टुभं द्वाविंशत्यृचमश्वस्तुतिस्तृतीयापष्ठ्यौ जगत्याविमानु द्वैपदं वैश्वदेवं तृचं भौवन आप्त्यो वा साधनभौवनो वा ॥ ५ ॥ इति० संहितायां पञ्चविंशोऽध्यायः ॥ २५ ॥

अग्निश्च सप्त लिङ्गोक्तानि प्रियो देवानां लौगाक्षिरनुष्टुभमनव-सानां बृहस्पते गृत्समदो ब्राह्मी त्रिष्टुभमिन्द्रगोमन्निन्द्रो गायत्र्यौ रय्याक्षिरग्नेपावानं प्रादुराक्षिर्वैश्वानरीयां वैश्वानरस्य त्रिष्टुभं कु-त्सोऽग्निर्ऋषिराग्नेयीं गायत्रीं वसिष्ठभरद्वाजौ महाँऽइन्द्रो माहेन्द्री वासिष्ठस्तस्य पन्द्रीं पथ्याबृहती नोधा गोतमो यज्ञाहिष्टं वसूयव आ ग्नेयीमनुष्टुभमेहि भरद्वाजो गायत्रीमृतवस्ते बृहस्पत्युपह्वरे वत्सो गा-यत्रीम् ॥ ६ ॥ उद्या ते गायत्रं तृचं सौम्यमामहीयवोऽनुवीरैस्-द्रुलो यत्पुरुपात्रिष्टुभमग्नेपत्नीर्मेधातिथिराग्नेयीं गायत्रीमभियज्ञ द्व्यृचमृतुदैवतं मेधातिथिस्तवायमैन्द्री त्रिष्टुभं विश्वामित्रोऽभिवनो जगतीं गृत्समदः स्वादिष्ठया मधुच्छन्दाः सौम्यावनुक्तानां गायत्र-म् ॥ ७ ॥ इति० संहितायां षड्विंशोऽध्यायः ॥ २६ ॥

समास्त्वाग्निकोऽध्यायः प्रजापतेरार्षं सामिधेन्यो नवाग्ने-य्यस्त्रिष्टुभोऽग्निना दृष्टा अग्निर्ऋषिः कर्माङ्गभूतमग्निं स्तौत्यूर्ध्वा द्वादशार्धमाप्रियमौष्णिहं विषमपदं प्राजापत्यमाग्नेयमग्निरप्स्वश्व-

ग्निरिहँ प्रजापतिरित्वेन संस्तूयते तेन प्राजापत्यम् ॥ ८ ॥ पीवो अन्नां द्वे वायव्ये त्रिष्टुभौ वसिष्ठ वायोद्वे प्राजापत्ये हिरण्यगर्भः प्राजापत्यः प्रयाभिर्द्वे वायव्ये वासिष्ठो नियुत्वान्वायव्याः पञ्चायोशुक्रोऽनुष्टुबेकया च त्रिष्टुबन्त्या गायत्र्यो नियुत्वान्वायो गृत्समदो वायो शुक्रः पुरुमीढाजमीढौ तववायो व्यश्व आङ्गिरसोऽभित्वा वसिष्ठ ऐन्द्रं प्रगाथं प्रथमा बृहती द्वितीया सतोबृहती त्वामिद्धिँ शंयुर्बार्हस्पत्यः कयान ऐन्द्रं तृचं गायत्रं वामदेवोऽन्त्या तु पादनिचृदका ऊर्जोनपातँ शंयुः पाहि नो गर्गः प्रागाथ एतं तृचं प्रागाथमाग्नेयं द्वे बृहत्यौ तृतीया सतोबृहती संवत्सरोऽस्याग्नेयम् ॥ ९ ॥ इति० संहितायां सप्तविंशोऽध्यायः ॥ २७ ॥

इन्द्रमिन्द्रः सौत्रामणिकोऽध्याय एकादश प्रयाजप्रैषा ऐन्द्रा आप्रीर्द्वयस्या आद्येऽनुयाके देवंबर्हिरनुयाजप्रैषा ऐन्द्रा एकादशीयाग्निमद्येन्द्रः सूक्तवाकप्रैषस्तथामद्य प्रतीक उभयत्रापि समिधानं महद्वायोधस आप्रिय एकादश प्रयाजप्रैषास्तथैव देवंबर्हिरनुयाजप्रैषा अग्निमद्य वायोधसः सूक्तवाकप्रैषः ॥ १० ॥ इति० संहितायामष्टाविंशोऽध्यायः ॥ २८ ॥

समिद्धो अञ्जनाद्यग्नेधिकाऽध्याय आद्या आप्रीस्त्रिष्टुभ एकादशाद्यस्तुतिर्बृहदुक्थो वामदेव्यो द्वादशाद्यो वा साप्तुम्भिर्वत्समत्त्वस्यो द्वादशाद्यस्तुतिस्त्रिष्टुभो भार्गवो जमदग्निर्ददर्श दीर्घतमाश्च समिद्धो अद्य द्वादशाप्रीस्त्रिष्टुभो जमदग्निः ॥ ११ ॥ केतुं कृण्वन्नाग्नेयीमतिजगती गायत्री मधुच्छन्दा जीमूतस्यैव पायुर्भारद्वाजः संग्रामाङ्गान्यूषुस्तवीर्वहमयाहं कार्मुकं गुणमार्ती तूणं जगत्यर्धेन सारथिमर्धेन रश्मीन्हयान्रथगोपायितृन्जगत्या लिङ्गोक्तदेवता द्वाभ्यां त्रिष्टुबनुष्टुभ्यामिषुमनुष्टुभा कशां ततो हस्तघ्नं ततस्तृचो रथदुन्दुभिदेवत्यावन्द्रोऽर्धर्चोऽन्त्यः सर्वास्त्रिष्टुभोऽनुक्ता आग्नेय्यः कृणमीथ इत्याद्या एकादशिन्यां द्वयोः पशुर्देवता अग्नये गायत्रायेति दश हविषोऽवैद्रैर्देवता ॥ १२ ॥ इति० संहितायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

देवसवितर्द्वाविंशत्यायो पुरुषमेधो नारायणः पुरुषो ददर्श विश्वानि देवगायत्रीँ सावित्रीँ द्याचादयो विभक्तारं मेधातिथिर्ब्रह्मणे

ब्राह्मणमिति द्वे कण्डिके तपसेऽनुवाकश्च ब्राह्मणम् ॥ १३ ॥ इति० संहितायां त्रिंशोऽध्यायः ॥ ३० ॥

सहस्रशीर्षा षोडशर्चमानुष्टुभं त्रिष्टुबन्तं पुरुषो जगद्बीजमन्त्रदेवताद्भ्यः षडृच उत्तरनारायणो मन्त्र आद्यास्तिस्रस्त्रिष्टुभो द्वे अनुष्टुभावन्त्या त्रिष्टुप् ॥ १४ ॥ इति० संहितायामेकत्रिंशोऽध्यायः ३१ ॥

तदेव सर्वमेधोऽध्याय आत्मदैवतः सप्तमेऽहनि सर्वहोमे विनियुक्तः सर्वमेधं ब्रह्म स्वयम्भ्वैक्षत तदीयं मन्त्रगणं प्रवायुमस्छेत्येतस्माद्याद्ये द्वे अनुष्टुभौ नतस्य द्विपदागायत्री हिरण्यगर्भश्चतस्रो मा माहिंसीद्यस्मान्नद्वे एताः प्रतीकचोदिता ब्रह्मयज्ञे ध्येयाः सर्वैवमेषोह चतस्रस्त्रिष्टुभ आपोह यश्चित्प्रतीकचोदिते ॥ १५ ॥ येनस्तस्पञ्च त्रिष्टुभः सदसस्पति तृचेन मेधाकामो मेधां याचते प्रथमा गायत्री लिङ्गोक्तदेवता द्वितीयाग्नेय्यनुष्टुप् तृतीया लिङ्गोक्तदेवतानुष्टुबिदं मे मान्ब्रवणिक्यनुष्टुबेतया देवेभ्यः श्रीकामो याचते श्रियम् ॥ १६ ॥ इति० संहितायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

अस्याजरासःसप्तदशाग्निष्टुत्याग्निष्टोमिके प्रथमेऽहनि पुरोरुच आग्नेय्य आद्ये द्वे ऐन्द्रवायवस्यास्याजरासो वत्सप्रीर्हरयो धूमकेतवो विरूपो यजमानो द्वे मैत्रावरुणस्य यजमानो गोतमो द्वे विरूपे शुक्रस्य कुत्सोऽयमिह मन्थिनो वैश्वदेवग्रहग्रहणं त्रीणि शता विश्वामित्र ऐन्द्राग्नस्याग्निर्वृत्राणि भरद्वाजो वैश्वदेवस्य विश्वेभिः सोम्यं मेधातिथिराघ्नवत्यतीययोर्द्वे आयत्पराशरः शाक्त्योऽग्नेशर्धोऽत्रिर्दुहिता विश्ववारा स्वाहिंहि भरद्वाजस्त्वे अग्ने द्वे बृहत्यावादित्यस्य त्वे अग्ने वसिष्ठः शुचि प्रस्कण्व आदित्यग्रहग्रहणे विदेवपामादितिर्वामदेवो गोतमो महो अग्नेः सावित्रस्य तुभ्यो धानाकोऽनुक्तं गायत्रं त्रैष्टुभम् ॥ १७ ॥ इन्द्रस्तुत्युक्थ्ये द्वितीयेऽहनि ऐन्द्र्यः पुरोरुचो द्वादश प्रतीकचोदिते च द्वे तिस्रश्चापश्चित्वसिष्ठो गाव उप पुरुमीढाजमीढौ यदद्य वसिष्ठ आसुते सुनीतिरातिष्ठतं विश्वामित्रः प्रवः सुखीको बृहस्त्रिस्त्रिशोक इन्द्रेहि मधुच्छन्दा इन्द्रो वृत्रविश्वामित्रः कुतस्त्वमगस्त्य आतबृगौरिवीतिः शाक्त्य इमान्ते कुत्सो जगतीमनुक्तं गायत्रं त्रैष्टुभम् ॥१८॥ सूर्यस्तुत्युक्थ्ये तृतीयेऽहनि सौर्यश्चतुर्दश पुरोरुचस्तिस्रश्च प्रतीकोक्ता विभ्राड्बृहज्जगती विभ्राट्सौर्य उदुत्यं तिस्र प्रस्कण्व मानोऽग-

स्यो यद्द्य श्रुतकक्षः सुतकक्षौ तरणिः प्रस्कण्वस्तरत्सूर्यस्य द्वे कुत्सो वण्महाँ२ ऽ‌द्वे जमदग्निर्बृहतीसतोबृहत्यौ आयन्त इव नृमेधो बृहती मत्स्याद्या ( १ ) देवाः कुत्स आकृष्णेन हिरण्यस्तूप आङ्गिरसोऽनाख्यातꣳ सौर्यं गायत्रं त्रैष्टुभम् ॥ १९ ॥ वैश्वदेवस्तुतिश्चतुर्थेऽहनि वैश्वदेव्यः पुरोरुच एकादश षट् च प्रतीकोक्ताः प्रवावृजे वसिष्ठस्त्रिष्टुभमिन्द्रवायूबृहस्पतिं द्वे मेधातिथिरश्विनः कुसीदीकाण्वोऽग्न इन्द्रप्रतिक्षत्र इन्द्राग्नी मित्रावरुणा जगती काश्यपोऽवत्सारोऽस्मेरुद्राः प्रगाथोऽघोश्वो अव कूर्मो गात्सर्मदो विश्वे अव लुशो धानाको विश्वेदेवाः सुहोत्रो देवेभ्यो हि वामदेवो जगतीमनुक्तंगायत्रं त्रैष्टुभम् ॥ २० ॥ अथानारभ्याधीतं मन्त्रगणमर्वाधिपशुमेधाक्षादित्यया ब्रह्मण्यौ द्दृशातुः प्रयायुं पञ्चदशार्चः पुरोरुग्गणो द्वे च प्रतीकोक्ते प्रयायुमृजिश्वा मित्रꣳ हुवेद्वे मधुच्छन्दा मित्रं लिङ्गोक्ता द्वायुवाकृथ आश्विनी विदथैन्द्री कुशिको नहिस्पशं विश्वामित्रो वैश्वानरीमुप्राविवनि वेन्द्राग्नी भरद्वाज उपास्मै सौमी देवलोऽसितो वा ये त्वा विश्वामित्रो जनिष्ठा वमो गौरिवीतिरातु वामदेवस्त्वमैन्द्रं त्वमिन्द्रेन्द्यौ नृमेधः पथ्याबृहतीसतोबृहत्यौ यशो देवानां कुत्सोऽदब्धेभिः सावित्री जगती भरद्वाजः ॥ २१ ॥ प्रवीरया पञ्चदशार्चः पुरोरुग्गणो द्वे च प्रतीकोक्ते प्रवीरया वसिष्ठो वायव्याकाव्ययोराजानेषु दक्षस्तिरश्चीनः परमेष्ठी प्रजापतिर्भावद्वृत्तं वृचमारोदसी जगती विश्वामित्र उक्थेभिर्वृत्रहन्तमा वसिष्ठ उपनः सुहोत्रो वैश्वदेवी प्रक्षाणि मेऽगस्त्यो द्वे इन्द्र मरुत्संवादे तदिद्वाथर्वणो बृहद्दिव इमाउत्वा द्वे बृहत्यौ मेधातिथिरयꣳसहस्रं मेधातिथिः सतोबृहतीम् ॥ २२ ॥ आनस्त्रयोदशार्चः पुरोरुग्गणश्चतुर्ऋचं प्रतीकचोदितं वानो वायव्यां जमदग्निरिन्द्रवायू सुसंदृशैन्द्रवायव्या तापस ऋधगित्था मैत्रावरुणी जमदग्निरायातमाश्विनी वसिष्ठः प्रैतु वैश्वदेवी कण्वश्चन्द्रमा अप्स्वैन्द्रीमारुती परिणामवादिनी त्रितआप्त्यो देवंदेवं वो मनुर्वैवस्वतो वैश्वदेवी दिविपृष्ठोमृध ऐन्द्र इन्द्राग्नी अपात्सुहोत्रो देवासो हि मनुरपाधम द्वे नृमेधोऽस्येन्मेधातिथिर्दशान्येकादशाद्यन्त्या च सतोबृहत्यः शेषाबृहत्यः शेषाबृहत्यः ॥ २३ ॥ इति० संहितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ इति० सर्वानुक्रमणिकायां तृतीयोऽध्यायः ॥ ३ ॥

यज्जाग्रतः षड्चं मानसं त्रैष्टुभꣳ शिवसंकल्पः पितुं नूर्णिहद्मग-स्त्योऽन्नस्तुतिमन्विचतुर्ऋचमानुष्टुभं द्वयोरनुमितिर्द्वयोः सिनीवालीस-रस्वत्यौ सिनीवालिपृथुष्टुके द्वे गृत्समदस्त्वमग्ने द्वे आग्नेय्यौ जगत्यौ हिरण्यस्तूप आङ्गिरस उत्तानायां द्वे देवश्रवा देववातश्च भारतावाद्या त्रिष्टुब्द्वितीयानुष्टुप्प्रमन्महे नोधा ऐन्द्रमैन्द्रं त्रैष्टुभमिच्छन्तित्वा ऋचमैन्द्रं त्रैष्टुभमेव देवश्रवा देववानश्च भारतौ ॥ १ ॥ अषाढं युत्सु गोतमश्चतुर्ऋचं त्रैष्टुभꣳ सौम्यमएैव्यष्वतुर्ऋचं त्रैष्टुभꣳ सा-वित्रमाङ्गिरसो हिरण्यस्तूपो द्वितीया जगत्युभापिबतमाश्विनं तृच-मुभापिबतं प्रस्कण्वो गायत्रीमप्नस्वतीमश्विनात्रिष्टुभौ कुत्स आ-रात्रि पथ्याबृहतीꣳ रात्रिदेवत्या काशिपा भरद्वाजदुहितोपस्तदुपस्या परोदिगहं गोतमः प्रातरग्निं वसिष्ठः सप्तर्चमाद्या जगती वसुदेव त्या पञ्च भगदेवत्यास्त्रिष्टुभोऽन्त्यौपस्याः ॥ २ ॥ पूषन्तव सुहोत्रः पथस्पथः परिपतिमृजिश्वैते पौष्ण्यौ गायत्रीत्रिष्टुभौ त्रीणिपदा धिष्ण्यौ गायत्र्यौ मेधातिथिर्घृतवती भुवनानां भरद्वाजो द्यावापृ-थिव्यां जगतीं वेनो लिङ्गोक्तदेवतां त्रिष्टुभं विहव्य आना-स्त्या हिरण्यस्तूप आश्विनीमेष वो मारुतीं त्रिष्टुभमगस्त्यः सहस्तोमा ऋषिसृष्टिप्रतिपादिका त्रिष्टुभं यज्ञः प्राजापत्य आयुष्यं वर्चस्यं तृचं दक्ष उष्णिक्कदाक्षरीत्रिष्टुभो हिरण्यस्तुतिरुतन ऋत्वि-जो वसुदेवत्या त्रिष्टुभमिमागिरः कूर्मो गार्त्समद आदित्यदेवत्यां त्रिष्टुभꣳ सप्तऋषयोऽध्यात्मवादिनी जगत्युत्तिष्ठ तृचो ब्राह्मणस्प-त्य आद्ये बृहत्यौ कण्वो घोरोऽन्त्यां त्रिष्टुभं गृत्समदो यद्मा चतु-र्थ्यं प्रतीकोक्तम् ॥ ३॥ इति० संहितायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

अपेतोऽध्यायः पित्र्य आदित्यस्य देवानां वाद्यागायत्री परं यजुः सवितातेगायत्री वायुः चत्वारि लिङ्गोक्तानि सवितातेगायत्री प-रंमृत्यो संकसुकस्त्रिष्टुभं मृत्युदेवत्याꣳ शंवातोऽनुष्टुब्बृहत्यौ वैश्व-देव्यायदमन्वती सुचीकस्त्रिष्टुभं वैश्वदेवीमपाघं लिङ्गोक्तदेवतामनु-ष्टुभꣳ शुनःशेपो दुःस्वप्ननाशनीमनड्वाहमानड्वह्यनुष्टुबिमं जीवे-भ्यः संकसुको मृत्युदेवत्यां त्रिष्टुभमायुष्मानग्न आग्नेयीं त्रिष्टुभं वैखानसः परीमेऽनुष्टुभमैन्द्री भारद्वाजः शिरिंबिठः क्रव्यादमग्निं त्रिष्टुभमाग्नेयीं दमनो वहवपाजातवेदसी त्रिष्टुप् स्योनापृथिवी मेधातिथिः पार्थिवीं गायत्रीमस्मात्त्वमाग्नेयी गायत्र्यनिरुक्ता ॥ ४ ॥

इति० संहितायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

ऋचंवाचं पञ्चाध्यायीं दध्यङ्ङाथर्वणो ददर्शाग्निकाश्वमेधिक·
धर्ममाद्योऽध्यायः शान्त्यर्थो वैश्वदेव आद्यानि यजूꣳषि यन्मे वा·
र्हस्पत्या पङ्क्तिः कयान्त्यमैन्द्र्यानिरुक्ता गायत्र्यैन्द्रोविश्वस्य विराड्
द्विपदा शंनो द्वे अनुष्टुभावहानि द्विपदागायत्री शंनइन्द्राग्नी त्रि·
ष्टुभ्मायऽयावन्त्याशीर्धीः शान्तिर्यजूꣳषि नमस्ते अस्त्वनुष्टुभौ त·
च्चक्षुः पुरउष्णिक्सौरी ॥ ५ ॥ इति० षट्त्रिंशोऽध्यायः ॥ ३६ ॥

आददे नारिरस्यभ्रिर्वैयतं देवी द्यावापृथिव्यं देव्योवम्र्योवल्मी·
कवपेयस्यगेवराहविहतमिन्द्रस्यौज आदाराः प्रैतु मखस्याश्वस्य·
र्जेव यमाय देवस्त्वार्चिरसि घर्मदेवत्यानि यो घर्मः स आदित्यो य
एव तपत्यनाधृष्टा पुरस्तात्सस पार्थिवानि यजमानाशीर्मधुप्राणदेव·
त्यानि गर्भो देवानामवकाशा मामाहिꣳसीरित्येतदन्ता घर्मदेवत्या
धर्तादिव ऊर्ध्वबृहत्यपश्यङ्गोपां त्रिष्टुभं दीर्घतमा हृदेत्वा परोष्णि·
क्त्वष्टृमन्तः पत्न्याशीरहः केतुना यजुषी घर्मदेवत्ये ॥ ६ ॥ इति०
संहितायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

आददेऽदित्यै रज्जुरिडएहि गौर्यस्ते त्रिष्टुभं दीर्घतमा इन्द्रा·
श्विना वैश्वदेवानि समुद्रायत्वा वातनामानि स्वाहाघर्माय घर्मदेव·
त्ये विश्वाआशा आश्विन्यनुष्टुब् द्विविधा घर्मदेवत्यमश्विना घर्म·
मुष्णिगपातां ककुब्यमेन्यस्मै स्वः स्वाहापूष्णे सस लिङ्गोक्तदेवतानि
स्वाहात्वं पयोदेवत्यं मधुहुतं घर्मो भीमं गायत्रीबृहत्यावनवसाने
अतिशक्वरी वाग्नेयी समस्ता ऽयवमाना या ते घर्म क्षत्रस्य बृह·
ती चतुःस्रक्तिर्महाबृहती घर्मतदनुष्टुबचिक्रदस्परोष्णिग्वावती द्या·
वापृथिवी दधिघर्मो मयित्यत्पङ्क्तिर्यजमानाशीः पयसोरेतो गाय·
त्र्यनवसाना त्विषः संसृग्दधिघर्मोऽनुक्तं घर्मदैवतम ॥ ७ ॥ इति०
संहितायाम् अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

स्वाहा प्राणेभ्यो मान्त्रवर्णिक्यो देवता मनसःकाममनुष्टुब्यजमा·
नाशीः श्रीर्देवता प्रजापतिः संभ्रियमाणो यथाकालं प्रायश्चित्तदेव·
ताः सविता प्रथमेऽहन्त्यहं क्रमेणोग्रश्च मारुतीगायत्री विमुखाश्वपो
मन्त्रोऽग्नौ विनियुक्तस्तस्मादाग्निक एवास्य ऋषिः परमेष्ठी प्राजा·
पत्यो वाग्निꣳहृदयेनाश्वमेधिकानि त्रीणि तत्रोक्त एव ऋषिर्लोम·
भ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिꣳशत् ॥ ८ ॥ इति० ए·

कोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

ईशावास्यमात्मदेवत्य आनुष्टुभोऽध्याय अनेजदेकं त्रिष्टुप् सपरि जगती वायुरनिलं यजुषी ओ३मिति परमाक्षरस्य योगिनामालम्बभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्यास्थूलादिगुणयुक्तस्य ब्रह्मऋषिश्छन्दोगायत्रं परमात्मा देवता ब्रह्मारम्भे विरामे च यागहोमादिषु शान्तिपुष्टिकर्मसु चान्येष्वपि काम्यनैमित्तिकादिषु सर्वेषु विनियोगोऽस्य क्रतो त्रिभिर्यजुर्भिरन्ते यज्ञान्योगी स्मारयत्यग्नेनयान्तनमस्करोकिर्हिरण्मयेनादित्योपासनमो ३ मिति नामनिर्देशो ब्रह्मणः खं ब्रह्मेत्याकाशरूपमन्ते ब्रह्म ध्यायेत्॥९॥इति० चत्वारिंशोऽध्यायः॥४०॥

अथातश्छन्दोदेवता गायत्र्या अग्निरुष्णिहः सवितानुष्टुभः सोमो बृहत्या बृहस्पतिः पङ्क्तेर्वरुणस्त्रिष्टुभ इन्द्रोजगत्या विश्वेदेवा विराजो मित्रः स्वराजोऽरुणोऽनिच्छन्दसः प्रजापतिर्विच्छन्दसो वायुर्द्विपदायाः पुरुषः एकपदाया ब्रह्मा सर्वा ऋच आग्नेय्यः सर्वाणि यजूंषि वायव्यानि सर्वाणि सामानि सौराणि सर्वाणि ब्राह्मणानि च स्वाहाकारस्याग्निर्वषट्कारस्य विश्वेदेवाः कर्मारम्भे मन्त्राणां देवता वेदितव्याः संन्यस्तमनासि देवतां ततो हविर्हूयते देवतामविज्ञाय यो जुहोति देवास्तस्य हविर्न जुषन्ते स्वाध्यायमपि योऽधीते मन्त्रदेवतज्ञः सोऽमुष्मिल्लोके देवैरपीज्यते तस्माच्च देवतावेद्या मन्त्रे मन्त्रे प्रयत्नतो मन्त्राणां देवताज्ञानान्मन्त्रार्थमधिगच्छति मन्त्रार्थज्ञानात्तु विधूतपाप्मानाकमभ्येति नहि कश्चिदविज्ञाय याथातथ्येन देवताः श्रौतानां कर्मणां विप्रः स्मार्तानां चाश्नुते फलम् ॥१०॥

अनादिष्टमध्यरादौ सर्वान्तकर्मणि परिभाषितं मन्त्रगणं वक्ष्यामः सर्वमाग्नेयं गायत्रं गौतमीयꣳ सर्वꣳ सावित्रमौष्णिहं भारद्वाजीयꣳ सर्वꣳ सौम्यमानुष्टुभमाथर्वणिकꣳ सर्वं बार्हस्पत्यं बार्हतमाङ्गिरसꣳ सर्वं वारुणं पाङ्क्तमालम्बायनीयꣳ सर्वमैन्द्रं त्रैष्टुभं याज्ञवल्कीयꣳ सर्वमादित्यदैवतं जागतं कौत्सम ॥ ११ ॥

यणः संवत्सरः शाक्वर्यभिप्लवे षडहे सौपर्णोऽर्धमासा मासाश्चातिश-
क्वरी पृष्ठ्ये षडहे सांयकायन ऋतवोऽष्टिरभिजितीत्रियघृतोऽग्निरत्य-
ष्टिः स्वरसामसु सरस्वत्यापोधृतिर्विषुवति रौहिणायन आदित्यो-
ऽतिधृतिर्विश्वजिति सौभर इन्द्रः कृतिर्गो आयुषो वाष्कलिर्मित्रा-
वरुणौ प्रकृतिर्दशरात्र. आचार्यो विश्वेदेवा आकृतिर्द्वादशरात्रिके
पृष्ठ्ये षडहे माह्लेयो दिशो विकृतिश्छन्दोमेषु शैलायन इमे लो-
काः संकृतिर्दशमेऽहनि पराशरः संवत्सरोऽभिकृतिर्महाव्रते शैलिनः
प्रजापतिरुत्कृतिरुदयनीयेऽतिरात्रे भौवायनो वायुश्छन्दांसि स-
र्वाणि ॥ १२ ॥ ऋषिभिरुपलक्षितं वाक्यं ऋषयश्छन्दोभिरुपलक्षिता
देवता मन्त्रवर्णादृग्यजुषोर्विनियोगतश्च विज्ञेया सर्वमेतच्छन्दोदै-
वतमार्षं च विज्ञाय यत्किञ्चिज्जपहोमादि करोति तस्य फलमश्नुते
ब्रह्मयज्ञारम्भे यथाविधि स्नात्वा छन्दःपुरुषमेनोनिर्णोदनं शरीरे न्य-
सेत्तिर्यग्बिलश्चमस ऊर्ध्वबुध्नस्तस्याक्षिणी गोतमभरद्वाजौ श्रोत्रे वि-
श्वामित्रजमदग्नी नासिके वसिष्ठकश्यपौ वागत्रिर्गायत्री छन्दोऽग्नि-
र्देवतां शिरसि विन्यसेदेवमेवोष्णिहं सवितारं ग्रीवास्वनूके
बृहतीं बृहस्पतिं बाह्वोर्बृहद्रथन्तरे द्यावापृथिवीमध्ये त्रिष्टुभमिन्द्रं
श्रोण्योर्जगतीमादित्यं मेढ्रेऽतिच्छन्दसं प्रजापतिं पायौ यज्ञायज्ञियं
वैश्वानरमूर्वोरनुष्टुभं विश्वान्देवानष्ठीवतोः पङ्क्तिं मरुतः पादयो-
र्द्विपदां विष्णुं प्राणेषु विच्छन्दसं वायुं न्यूनातिरिक्तेष्वङ्गेषु न्यूनाक्षरं
छन्द आपोदेवतेश्वेवं सर्वाङ्गेषु योजयित्वा वेदमयः संपद्यते शा-
पानुग्रहसमर्थो भवति ब्राह्मं तेजश्च वर्धते न कुतश्चिद्भयं विन्दते ऋ-
ङ्मयो यजुर्मयः साममयस्तेजोमयो ब्रह्ममयोऽमृतमयः संभूय ब्रह्मे-
ङ्मयो यजुर्मयः
वाप्येति तस्मादेतन्नाब्रह्मचारिणे नातपस्विने नासंवत्सरोषिताय ना-
प्रवक्त्रेऽनुब्रूयादनेनाधीतेन चान्द्रायणादिफलमवाप्नोत्यनेन च सम्य-
ग्ज्ञातेन ब्रह्मणः सायुज्यं सलोकतामाप्नोत्याप्नोति ॥ १३ ॥ इति०
सर्वानुक्रमणिकायां चतुर्थोऽध्यायः ॥ ४ ॥

अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यति-
जगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टी धृत्यतिधृतयः कृतिप्रकृत्याकृतिवि-
कृतिसंकृत्यभिकृत्युत्कृतयश्चतुर्विंशत्यक्षरादीनि चतुरुत्तराण्यूना-
धिकेनैकेननिचृद्भुरिजौ द्वाभ्यां विराट्स्वराजौ पादपूरणार्थं तु क्षै-
प्रसंयोगैकाक्षरीभावान्व्यूहेदाद्ये तु सप्तवर्गे पादविशेषात्सप्ताविंशो-

पास्ताननुक्रामन्त एवोदाहरिष्यामो विराड्रूपा विराट्स्थानाश्च बहूनामपि त्रिष्टुभ एवेत्युद्देशस्तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागता इति संज्ञा अनादेशेऽष्टाक्षराः पादाश्चतुष्पदाश्चर्चः ॥१॥ प्रथमं छन्दस्त्रिपदा गायत्री पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिः षट्सप्तैकादशा उष्णिग्गर्भास्त्रयः सप्तकाः पादनिचृन्मध्यमः षट्कश्चेदतिनिचृद्दशकश्चेद्यवमध्या यस्यास्तु षट्कसप्तकाष्टका सा वर्धमाना विपरीता प्रतिष्ठा द्वौ षट्कौ सप्तकश्चेति ह्रसीयसी ॥ २ ॥ द्वितीयमुष्णिक्त्रिपदान्त्यो द्वादशक आद्यश्चेत्पुरउष्णिङ्मध्यमश्चेत्ककुप्त्रैष्टुभजागतचतुष्काः ककुम्न्यङ्कुशिरैकादशिनोः परः षट्कस्तनुशिरा मध्ये चेत्पिपीलिकमध्याद्यः पञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा चतुःसप्तकोष्णिगेव ॥ ३ ॥ तृतीयमनुष्टुप्चतुष्पदाथ पञ्चपञ्चकाः षट्कश्चैको महापदपङ्क्तिर्जागतावष्टकश्च कृतिर्मध्ये चेदष्टकः पिपीलिकमध्या नवकयोर्मध्ये जागतः काविराण्नवैराजत्रयोदशिनष्टरूपा द्वेकास्त्रयोविराडेकादशका वा ॥ ४ ॥ चतुर्थं बृहती तृतीयो द्वादशक आद्यश्चेत्पुरस्ताद्बृहती द्वितीयश्चेन्न्यङ्कुसारिण्युरोबृहती स्कन्धोग्रीवी वान्त्यश्चेदुपरिष्टाद्बृहत्यष्टिनोर्मध्ये दशकौ विष्टारबृहती त्रिजागतोर्ध्वबृहती त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्या नवकाष्टकैकादशाष्टिनो विषमपदा चतुर्नवका बृहत्येव ॥ ५ ॥ पञ्चमं पाङ्क्तं पञ्चपदार्थं चतुष्पदा विराट् दशका अयुजौ जागतौ सतोबृहती युजौ चेद्विपरीतावाद्यौ चेत्प्रस्तारपङ्क्तिरन्त्यौ चेदास्तारपङ्क्तिराद्यान्त्यौ चेत्संस्तारपङ्क्तिर्मध्यमौ चेद्विष्टारपङ्क्तिः ॥ ६ ॥ षष्ठं त्रिष्टुप् त्रैष्टुभपदा द्वौ तु जागतौ यस्याः सा जागते जगती त्रैष्टुभौ त्रिष्टुब्वैराजौ जागतौ वाभिसारिणी नवकौ वैराजास्त्रिष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थानैकादशिनस्त्रयोऽष्टकश्च विराड्रूपा द्वादशिनस्त्रयोऽष्टकश्च ज्योतिष्मती यतोऽष्टकस्ततो ज्योतिश्चत्वारोऽष्टका जागतश्च महाबृहती मध्ये जागतश्चेद्यवमध्याद्यौ दशकावष्टकास्त्रयः पङ्क्त्युत्तरा विराट् पूर्वा वा ॥७॥ सप्तमं जगती जागतपदाष्टिनस्त्रयः स्यौ च द्वौ महासतोबृहत्यष्टकौ सप्तकः षट्कौ दशको नवकश्च षडष्टका वा महापङ्क्तिर्माध्यंदिनीये वाजसनेयके सर्वानुक्रमणिकैषा कृतिर्भगवतः कात्यायनस्यैषा कृतिर्भगवतः कात्यायनस्य ॥ ८ ॥ इति सर्वानुक्रमणिकायां पञ्चमोऽध्यायः ॥५॥ काण्डिकासंख्या ॥१२४॥ समाप्ता सर्वानुक्रमणी ॥

# अथानुवाकसूत्राध्यायः ।

श्रीवेदपुरुषाय नमः ॥ ॐ अथानुवाकान्वक्ष्यामि ब्रह्मणा निर्मितान्पुरा । शिष्याणामुपदेशाय मन्त्रसंस्कार एव च । विप्राणां यज्ञकालेषु जपहोमार्चनादिषु ॥ १ ॥ इषेत्वैका वसोः पवित्रं तिस्रोऽग्नेव्रतपते सप्त पवित्रेस्थो द्वे धामोसि तिस्रो धृष्टिरसि शर्मासि द्विकौ देवस्यत्वापञ्च प्रत्युष्टꣳरक्षस्तिस्रो दशैकाग्निꣳशत् ॥ १० ॥ १३ ॥ १ ॥ कृष्णोसि षडग्नेवाजजित्तिस्रो मयीदमग्नीषोमयोः पञ्चकायाग्नेऽदब्धायो चतस्रः संवर्चसा पञ्चाग्नये कव्यवाहनाय षट्सप्तचतुस्त्रिꣳशत् ॥ ७ ॥ ३४ ॥ २ ॥ समिधाग्निं भूर्भुवः स्वश्चतुष्कावग्निर्ज्योतिर्द्वे उपप्रयन्तः षड्विꣳशतिर्भूर्भुवःस्वश्चतस्रो गृहामा तिस्रः प्रघासिनः पञ्च पूर्णादर्वि द्वेऽक्षन्नमीमदन्त षडेष ते सप्तदशात्रिषष्टिः ॥ १० ॥ ६३ ॥ ३ ॥ एवं द्वे महीनां पयश्चतस्र आकूत्याञ्यक्सामयो द्विकौ व्रतं कृणुत षडेषा ते चतस्रो वस्व्यसि तिस्र एष ते द्वे शुक्रंत्वा चतस्रोऽदित्यास्त्वगष्टौ दशसप्तत्रिꣳशत् ॥ १० ॥ ३७ ॥ ४ ॥ अग्नेस्तनूरापतये चतुष्कौ तातायनी द्वे इन्द्रघोषस्तिस्रो युञ्जतेऽष्टौ देवस्यत्वा चतस्रो देवस्यत्वा पञ्च विभूरसि चतस्रो ज्योतिरसि पञ्चविष्णो तिस्रो दशत्रिचत्वारिꣳशत् ॥ १० ॥ ४३ ॥ ५ ॥ देवस्यत्वा पशुपावीरसि पञ्च माहिः षट् सन्ते तिस्रः समुद्रङ्गच्छ हविष्मतीर्द्विकौ हृदेत्वा पञ्च देवस्य त्वाष्टावष्टौ सप्तत्रिꣳशत् ॥ ८ ॥ ३७ ॥ ॥ ६ ॥ वाचस्पतय उपयामगृहीतोसि त्रिकावावायोयं वा द्विकौ धावामेका तंप्रत्नथा चतस्रोऽयंवेनो येदेवासस्त्रिकाविन्द्राय मूर्धानं द्विकौ यत्त एका प्राणाय तिस्रो मधव इन्द्राग्नी आगतमाघीमासश्चर्षणीधृतो विश्वेदेवास आगतेन्द्रमरुत्वो मरुत्वन्तं वृषभं मरुता स्वौजसे सजोषा इन्द्रमरुत्वाँ २ इन्द्रमहाँ २ इन्द्रो महाँ २ इन्द्रमेकैकोदुत्यमष्टौ पञ्चविꣳशतिरष्टाचत्वारिꣳशत् ॥ २५ ॥ ४८ ॥ ७ ॥ उपयामगृहीतोस्यादित्येभ्यः पञ्च वाममद्य द्वे सुशर्मास्येका बृहस्पतिसुतस्य द्वे हरिरसि चतस्रः सामिन्द्रणोऽष्टौ माहिरेजतु दशामास्यः पञ्चकावातिष्ठयुस्वार्हान्द्रमिदेकैका यस्माद्य द्वेऽग्नेपवस्वोत्तिष्ठन्नस्थमुदुत्यमेकैकाजिघ्र द्वे विनइन्द्रवाचस्पतिं विश्वकर्मन्नेकैकाग्नयेत्वा चतस्र इहरतिस्तिस्रः परमेष्ठी दशत्रयोविꣳशतिस्त्रिषष्टिः ॥ २३ ॥ ॥ ६३ ॥ ८ ॥ देवसवितश्चतस्र इन्द्रस्य वज्रः पञ्च देवस्याहं दशापये तिस्रो वाजस्येमम्प्रसवस्त्रिरेकाक्षरेणैषते चतुष्कौ सविता द्वे अष्टौ

चत्वारिँशत् ॥ ८ ॥ ४० ॥ ९ ॥ अपो देवाश्चतस्रः सोमस्य त्विषिः
पञ्चावेष्टाः सप्त सोमस्य त्वा चतस्र इन्द्रस्यवज्रः पञ्च स्योनासि
चतस्रः सवित्रेका दिवस्पां चतुस्त्रिँशत् ॥ ८ ॥ ३४ ॥ १० ॥ युञ्-
जान एकादश मनूर्तँ षोडश देवस्यत्वा दशापो देवीश्चत्वाअपोदेक-
ादशादित्यैष्ट्वा पञ्चाकृतिमष्टादश सप्तत्र्यशीतिः ॥ ७ ॥ ८३ ॥ ११ ॥
इशानः सप्तदश दिवस्परि द्वादश समिधाग्निं पञ्चदशापेत सप्त-
दशा सुन्वन्तं त्रयोदश या ओषधीः सप्तविँशतिर्मामा षोडशसप्त-
सदशाँशतम् ॥ ७ ॥ ११७ ॥ १२ ॥ मयिगृह्णामिपञ्चदश दश ध्रुवासि
मधुवाता एकादशकौ सस्यक्षवन्ति नवेमंमा षडपात्वैकाऽयं पुरः
पञ्च सप्ताष्टापञ्चाशत् ॥ ७ ॥ ५८ ॥ १३ ॥ ध्रुवक्षितिः षड् सजूरृतु-
भिर्मूर्धावयो द्विकाविन्द्राग्नी आयुर्मे पञ्चावाशुस्त्रिवृद्देकाग्नेर्भागोस्येकया
चतुष्कावष्टायेकत्रिँशत् ॥ ८ ॥ ३१ ॥ १४ ॥ अग्नेजातान्पञ्च रश्मि-
नासत्याय चतस्रो राश्यस्त्वयं पुरः पञ्चकावग्निर्मूर्धैकोनत्रिँशायेन-
ऋषयोऽष्टौ तपश्च नवसप्तपञ्चषष्टिः ॥७॥६५॥१५॥ नमस्ते षोडश हि-
रण्यबाहव उष्णीषिणे तक्षभ्यो ज्येष्ठाय पञ्चकाः सुत्याय चतस्रः
शंभवायैका पार्योपञ्च द्रापे अन्धसो विँशतिर्नवषट्षष्टिः ॥ ९ ॥
॥ ६६ ॥ १६ ॥ अश्मन्नूर्जं दश नमस्ते पञ्चाग्निस्तिग्मेन नव चक्षुषः
पिताष्टावाशुः शिशानः सप्तदशोदेनं क्रमध्वमाग्निना पञ्चदशकौ शु-
क्रज्योतिः सप्तमँस्तनं त्रयोदश नवैकोनशतम् ॥ ९ ॥ ९९ ॥ १७ ॥
वाजः सप्तमूक्चतुष्का अश्माग्निस्त्रिकावँशुः पञ्चैका चतस्रो वा-
जाय द्वे वाजस्य त्वष्टावृताषाड् त्रयोदशाग्निं युनज्मि सप्त यदाकू-
ताद्यार्श्वहत्याय दशकौ त्रयोदशासप्तसप्ततिः ॥ १३ ॥ ७७ ॥ १८ ॥
स्वाद्वींत्वैकादश देवायज्ञं विँशतिः सुरावन्तँ सप्तदशोर्वांरतौ
त्रयोदशाव्याजानुर्दश सोमोराजाष्टौ सीसेन तन्त्रँ षोडश सप्तप-
ञ्चनवतिः ॥ ७ ॥ ९५ ॥ १९ ॥ क्षत्रस्य योनिस्त्रयोदश यद्देवा दशा-
स्याद्धाम्यष्टौ योसमिद्धो अग्निर्द्वादशाश्विनाहविस्त्रयोदशाश्विना-
तेजसैकादश नवनवतिः ॥ ९ ॥ ९० ॥ २० ॥ इमंमे समिद्धो अग्नि-
रेकादशकौ वसन्तेन ऋतुना षड्ढोतायक्षत्समिधाग्निं द्वादशाऽश्विनौ
छागस्य सप्त देवंबर्हिश्चतुर्दश षडेकाष्टिः ॥ ६ ॥ ६१ ॥ २१ ॥ तेजोसि
पञ्चाग्नय एका हिंकाराय द्वे तत्सवितुर्दश विभूर्मात्रैका काय द्वे आ-
ग्नेयैस्त्रयोदश रोपाद्वैकाज्जविँशतिश्चतुस्त्रिँशत् ॥१९॥३४॥२२॥

हिरण्यगर्भो यः प्राणतो द्विकौ युञ्जन्त्यष्टौ वायुष्ट्वा पञ्च प्राणाय तिस्र उत्सक्थ्या द्वादश गायत्री कस्त्वा षट्कौ कः स्विदष्टौ कास्विद्दश सुभूः स्वयंभूस्तिस्र एकादशपञ्चषष्टिः ॥ ११ ॥ ६५ ॥ ५३ ॥ अश्वस्तूपरो धूम्रान्वसन्ताय समुद्राय शिशुमारान्मयुः प्राजापत्यो दशकाश्चत्वारश्चत्वारिᳪंशत् ॥ ४ ॥ ४० ॥ २४ ॥ शार्दंदाद्भिर्नवैकैका हिरण्यगर्भश्चतस्र आपो दश मानोमित्रो यद्दश्वस्याष्टकौ यत्ते षडिमानुकं द्वे पञ्चदश सप्तचत्वारिᳪंशत् ॥ १५ ॥ ४७ ॥ २५ ॥ आब्रह्म पञ्चदशोष्वात एकादश द्वौ षड्विᳪंशतिः ॥ २ ॥ २६ ॥ २६ ॥ समास्त्वा दशोर्ध्वा अस्य पीवोअन्ना द्वादशकायमित्येकादश चत्वारः पञ्चचत्वारिᳪंशत् ॥ ४ ॥ ४५ ॥ २७ ॥ होतायक्षदेकादश देवंबर्हिर्दश पुनरप्येवं चत्वारः षट्चत्वारिᳪंशत् ॥ ४ ॥ ४६ ॥ २८ ॥ समिद्धोअञ्जन्नेकादश यद्क्रन्दत्रयोदश समिद्धो अद्य द्वादश केतुंकृण्वंश्चतुर्विᳪंशतिश्चत्वारः षष्टिः ॥ ४ ॥ ६० २९ ॥ देवसवितः षट् तपसे कीलालᳪं षोडश द्वौ द्वाविᳪंशतिः ॥ २ ॥ २२ ॥ ३० ॥ सहस्रशीर्षा षोडशाद्भ्यः संभृतः षट् द्वौ द्वाविᳪंशतिः ॥ २ ॥ २२ ॥ ३१ ॥ तदेव सप्त वेनस्तत्षट् द्वौ षोडश ॥ २ ॥ १६ ॥ ३२ ॥ अस्याजरासः सप्तदशापश्चिद्वादश विभ्राड् चतुर्दश प्रवावृजे एकादश प्रवायुमच्छीरया पञ्चदशाकाधानञ्चोदश सप्तसप्तनवतिः ॥ ७ ॥ ९७ ॥ ३३ ॥ यज्जाग्रतः पञ्च नवः सोमोधेनुमाष्टण्येन पूषन्तव दशाका नवदष्टौ षड्शापञ्चाशत् ॥ ६ ॥ ५८ ॥ ३४ ॥ अपेतो दशाद्यं द्वादश द्वौद्वाविᳪंशतिः ॥ २ ॥ २२ ॥ ३५ ॥ ऋचं वाचᳪंषोडश द्यौः शान्तिरष्टौ द्वौचतुर्विᳪंशतिः ॥ २ ॥ २४ ॥ ३६ ॥ देवस्यत्वा दश यमायत्वैकादश द्वावेकविᳪंशतिः ॥ २ ॥ २१ ॥ ३७ ॥ देवस्यत्वाष्टौ यमायत्वा क्षत्रस्यत्वा दशाकौ त्रयोऽष्टाविᳪंशतिः ॥ ३ २८ ॥ ३८ ॥ स्वाहाप्राणेभ्यः षड्प्रश्च सप्त द्वौ त्रयोदश ॥ २ ॥ १३ ॥ ३९ ॥ ईशावास्यमष्टावन्धं तमो नव द्वौ सप्तदश ॥ २ ॥ १७ ॥ ४० ॥ दशाध्याये समाख्यातानुवाकाः सर्वसंख्यया । शतं दशानुवाकाश्च नवान्ये च मनीषिभिः ॥ १ ॥ सप्तपष्टिश्चितो ज्ञेया सौत्रैर्द्वाविंशतिस्तथा । अश्व एकोनपञ्चाशत्पञ्चत्रिंशत्खिले स्मृताः ॥ २ ॥ शुक्रियेषु तु विज्ञेया एकादश मनीषिभिः । एकीकृत्य समाख्यातं त्रिशतं त्र्यधिकं मतम् ॥ ३ ॥

इत्यनुवाकसूत्राध्यायः संपूर्णः ॥